# ॥ अक्ष्युपनिषत् ॥

यत्सप्तभूमिकाविद्यावेद्यानन्दकलेवरम् ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥
ॐ सह नाववतु सह नौ भुनक्तु
सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥
ॐ शान्तिः शान्तिः शान्तिः ॥
हरिः ॐ ॥
अथ ह सांकृतिर्भगवानादित्यलोकं जगाम ।
तमादित्यं नत्वा चाक्षुष्मतीविद्यया
तमस्तुवत् ।ॐ नमो भगवते श्रीसूर्या-
याक्षितेजसे नमः ।ॐ खेचराय नमः ।
ॐ महासेनाय नमः ।ॐ तमसे नमः ।
ॐ रजसे नमः ।ॐ सत्त्वाय नमः ।
ॐ असतो मा सद्गमय ।तमसो मा ज्योतिर्गमय ।
मृत्योर्माऽमृतं गमय ।हंसो भगवा-
ञ्छुचिरूपः प्रतिरूपः ।विश्वरूपं घृणिनं
जातवेदसं हिरण्मयं ज्योतीरूपं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः पुरुषः
प्रजानामुदयत्येष सूर्यः ।ॐ नमो
भगवते श्रीसूर्यायादित्यायाक्षितेजसेऽहोवाहिनि
वाहिनि स्वाहेति ।एवं चाक्षुष्मतीविद्यया स्तुतः
श्रीसूर्यनारायणः सुप्रीतोऽब्रवीच्चाक्षुष्मती-
विद्यां ब्राह्मणो यो नित्यमधीते न तस्याक्षिरोगो
भवति ।न तस्य कुलेऽन्धो भवति ।अष्टौ
ब्राह्मणान्ग्राहयित्वाथ विद्यासिद्धिर्भवति ।
य एवं वेद स महान्भवति ॥१॥
अथ ह सांकृतिरादित्यं पप्रच्छ भगवन्-
ब्रह्मविद्यां मे ब्रूहीति ।तमादित्यो होवाच ।
सांकृते शृणु वक्ष्यामि तत्त्वज्ञानं सुदुर्लभम् ।
येन विज्ञातमात्रेण जीवन्मुक्तो भविष्यसि ॥१॥
सर्वमेकमजं शान्तमनन्तं ध्रुवमव्ययम् ।
पश्यन्भूतार्थचिद्रूपं शान्त आस्व यथासुखम् ॥२॥

अवेदनं विदुर्योगं चित्तक्षयमकृत्रिमम् ।
योगस्थः कुरु कर्माणि नीरसो वाथ मा कुरु ॥ ३॥
विरागमुपयात्यन्तर्वासनास्वनुवासरम् ।
क्रियासूदाररूपासु क्रमते मोदतेऽन्वहम् ॥ ४॥
ग्राम्यासु जडचेष्टासु सततं विचिकित्सते ।
नोदाहरति मर्माणि पुण्यकर्माणि सेवते ॥ ५॥
अनन्योद्वेगकारीणि मृदुकर्माणि सेवते ।
पापाद्बिभेति सततं न च भोगमपेक्षते ॥ ६॥
स्नेहप्रणयगर्भाणि पेशलान्युचितानि च ।
देशकालोपपन्नानि वचनान्यभिभाषते ॥ ७॥
मनसा कर्मणा वाचा सज्जनानुपसेवते ।
यतः कुतश्चिदानीय नित्यं शास्त्राण्यवेक्षते ॥ ८॥
तदासौ प्रथमामेकां प्राप्तो भवति भूमिकाम् ।
एवं विचारवान्यः स्यात्संसारोत्तरणं प्रति ॥ ९॥
स भूमिकावानित्युक्तः शेषस्त्वार्य इति स्मृतः ।
विचारनाम्नीमितरामागतो योगभूमिकाम् ॥ १०॥
श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणः ।
मुख्यया व्याख्ययाख्याताञ्छ्रयति श्रेष्ठपण्डितान् ॥ ११॥
पदार्थप्रविभागज्ञः कार्याकार्यविनिर्णयम् ।
जानात्यधिगतश्चान्यो गृहं गृहपतिर्यथा ॥ १२॥
मदाभिमानमात्सर्यलोभमोहातिशायिताम् ।
बहिरप्यास्थितामीषत्यजत्यहिरिव त्वचम् ॥ १३॥
इत्थंभूतमतिः शास्त्रगुरुसज्जनसेवया ।
सरहस्यमशेषेण यथावदधिगच्छति ॥ १४॥
असंसर्गाभिधामन्यां तृतीयां योगभूमिकाम् ।
ततः पतत्यसौ कान्तः पुष्पशय्यामिवामलाम् ॥ १५॥
यथावच्छास्त्रवाक्यार्थे मतिमाधाय निश्चलाम् ।
तापसाश्रमविश्रान्तैरध्यात्मकथनक्रमैः ।
शिलाशय्यासनासीनो जरयत्यायुराततम् ॥ १६॥
वनावनिविहारेण चित्तोपशमशोभिना ।
असङ्गसुखसौख्येन कालं नयति नीतिमान् ॥ १७॥
अभ्यासात्साधुशास्त्राणां करणात्पुण्यकर्मणाम् ।
जन्तोर्यथावदेवेयं वस्तुदृष्टिः प्रसीदति ॥ १८॥
तृतीयां भूमिकां प्राप्य बुद्धोऽनुभवति स्वयम् ॥ १९॥
द्विप्रकारसंसर्गं तस्य भेदमिमं श्रुणु ।
द्विविधोऽयमसंसर्गः सामान्यः श्रेष्ठ एव च ॥ २०॥

नाहं कर्ता न भोक्ता च न बाध्यो न च बाधकः ।
इत्यसंजनमर्थेषु सामान्यासङ्गनामकम् ॥ २१॥
प्राक्कर्मनिर्मितं सर्वमीश्वराधीनमेव वा ।
सुखं वा यदि वा दुःखं कैवात्र तव कर्तृता ॥ २२॥
भोगाभोगा महारोगाः संपदः परमापदः ।
वियोगायैव संयोगा आधयो व्याधयो धियाम् ॥ २३॥
कालश्च कलनोद्युक्तः सर्वभावाननारतम् ।
अनास्थयेति भावानां यदभावनमान्तरम् ।
वाक्यार्थलब्धमनसः समान्योऽसावसङ्गमः ॥ २४॥
अनेन क्रमयोगेन संयोगेन महात्मनाम् ।
नाहं कर्तेश्वरः कर्ता कर्म वा प्राक्तनं मम ॥ २५॥
कृत्वा दूरतरे नूनमिति शब्दार्थभावनम् ।
यन्मौनमासनं शान्तं तच्छ्रेष्ठासङ्ग उच्यते ॥ २६॥
सन्तोषामोदमधुरा प्रथमोदेति भूमिका ।
भूमिप्रोदितमात्रोऽन्तरमृताङ्कुरिकेव सा ॥ २७॥
एषा हि परिमृष्टान्तः संन्यासा प्रसवैकभूः ।
द्वितीयां च तृतीयां च भूमिकां प्राप्नुयात्ततः ॥ २८॥
श्रेष्ठा सर्वगता ह्येषा तृतीया भूमिकात्र हि ।
भवति प्रोज्झिताशेषसंकल्पकलनः पुमान् ॥ २९॥
भूमिकात्रितयाभ्यासादज्ञाने क्षयमागते ।
समं सर्वत्र पश्यन्ति चतुर्थीं भूमिकां गताः ॥ ३०॥
अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ।
पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकां गताः ॥ ३१॥
भूमिकात्रितयं जाग्रच्चतुर्थी स्वप्न उच्यते ॥ ३२॥
चित्तं तु शरदभ्रांशविलयं प्रविलीयते ।
सत्त्वावशेष एवास्ते पञ्चमीं भूमिकां गतः ॥ ३३॥
जगद्विकल्पो नोदेति चित्तस्यात्र विलापनात् ।
पञ्चमीं भूमिकामेत्य सुषुप्तपदनामिकाम् ।
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रकः ॥ ३४॥
गलितद्वैतनिर्भासो मुदितोऽतःप्रबोधवान् ।
सुषुप्तमन एवास्ते पञ्चमीं भूमिकां गतः ॥ ३५॥
अन्तर्मुखतयातिष्ठन्बहिर्वृत्तिपरोऽपि सन् ।
परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥ ३६॥
कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ।
षष्ठीं तुर्याभिधामन्यां क्रमात्पतति भूमिकाम् ॥ ३७॥
यत्र नासन्नसद्रूपो नाहं नाप्यहंकृतिः ।

केवलं क्षीणमननमास्तेऽद्वैतेऽतिनिर्भयः ॥ ३८॥
निर्ग्रन्थिः शान्तसन्देहो जीवन्मुक्तो विभावनः ।
अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः ॥ ३९॥
षष्ठ्यां भूमावसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् ॥ ४०॥
विदेहमुक्ततात्रोक्ता सप्तमी योगभूमिका ।
अगम्या वचसां शान्ता सा सीमा सर्वभूमिषु ॥ ४१॥
लोकानुवर्तनं त्यक्त्वा त्यक्त्वा देहानुवर्तनम् ।
शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु ॥ ४२॥
ओङ्कारमात्रमखिलं विश्वप्राज्ञादिलक्षणम् ।
वाच्यवाच्यकताभेदाभेदेनानुपलब्धितः ॥ ४३॥
अकारमात्रं विश्वः स्यादुकारतैजसः स्मृतः ।
प्राज्ञो मकार इत्येवं परिपश्येत्क्रमेण तु ॥ ४४॥
समाधिकालात्प्रागेव विचिन्त्यातिप्रयत्नतः ।
स्थुलसूक्ष्मक्रमात्सर्वं चिदात्मनि विलापयेत् ॥ ४५॥
चिदात्मानं नित्यशुद्धबुद्धमुक्तसदद्वयः ।
परमानन्दसन्देहो वासुदेवोऽहओमिति ॥ ४६॥
आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ।
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ ॥ ४७॥
अविद्यातिमिरातीतं सर्वाभासविवर्जितम् ।
आनन्दममलं शुद्धं मनोवाचामगोचरम् ॥ ४८॥
प्रज्ञानघनमानन्दं ब्रह्मास्मीति विभावयेत् ॥ ४९॥
इत्युपनिषत् ॥
ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥
ॐ शान्तिः शान्तिः शान्तिः ॥
हरिः ॐ तत्सत् ॥
इत्यलक्ष्युपनिषत् ॥

---

Please send corrections to sanskrit@cheerful.com
Last updated April 25, 2000